॥ गर्भस्तुती ॥

श्री गणेशाय नमः ।
देवा ऊचुः ।
जगद्योनिरयोनिस्त्वमनन्तोऽव्यय एव च ।
ज्योतिःस्वरूपो ह्यनिशः सगुणो निर्गुणो महान् ॥ १॥

भक्तानुरोधात्साकारो निराकारो निरङ्कुशः ।
निर्व्यूहो निखिलाधारो निःशङ्को निरुपद्रवः ॥ २॥

निरुपाधिश्च निर्लिप्तो निरीहो निधनान्तकः ।
स्वात्मारामः पूर्णकामोऽनिमिषो नित्य एव च ॥ ३॥

स्वेच्छामयः सर्वहेतुः सर्वः सर्वगुणाश्रयः ।
सर्वदो दुःखदो दुर्गो दुर्जनान्तक एव च ॥ ४॥

सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः ।
वेदहेतुश्च वेदश्च वेदाङ्गो वेदविद्विभुः ॥ ५॥

इत्येवमुक्त्वा देवाश्च प्रणेमुश्च मुहुर्मुहुः ।
हर्षाश्रुलोचनाः सर्वे ववृषुः कुसुमानि च ॥ ६॥

द्विचत्वारिंशन्नामानि प्रातरुत्थाय यः पठेत् ।
दृढां भक्तिं हरेर्दास्यं लभते वाञ्छितं फलम् ॥ ७॥

इत्येवं स्तवनं कृत्वा देवास्ते स्वालयं ययुः ।
बभूव जलवृष्टिश्च निश्चेष्टा मथुरापुरी ॥ ८॥

॥ इति श्रीब्रह्मवैवर्ते देवकृता गर्भस्तुतिः सम्पूर्णा ॥